# नवग्रहस्तोत्र

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ।
तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ १॥

दधिशङ्खतुषाराभं क्षीरोदार्णवसंभवम् ।
नमामि शशिनं सोमं शम्भोर्मुकुटभूषणम् ॥ २॥

धरणीगर्भसंभूतं विद्युत्कान्तिसमप्रभम् ।
कुमारं शक्तिहस्तं तं मङ्गलं प्रणमाम्यहम् ॥ ३॥

प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥ ४॥

देवानां च ऋषीणां च गुरुं काञ्चनसंनिभम् ।
बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिम् ॥ ५॥

हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ ६॥

नीलांजनसमाभासं रविपुत्रं यमाग्रजम् ।
छायामार्तण्डसंभूतं तं नमामि शनैश्चरम् ॥ ७॥

अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ।

सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहम् ॥ ८॥

पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् ।

रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम् ॥ ९॥

इति व्यासमुखोद्गीतं यः पठेत्सुसमाहितः ।

दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति ॥ १०॥

नरनारीनृपाणां च भवेद्दुःस्वप्ननाशनम् ।

ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ॥

ग्रहनक्षत्रजाः पीडास्तस्कराग्निसमुद्भवाः ।

ताः सर्वाः प्रशमं यान्ति व्यासो ब्रूते न संशयः ॥

॥ इति श्रीव्यासविरचितं नवग्रहस्तोत्रं सम्पूर्णम् ॥

॥ श्रीनवग्रहस्तोत्रम् ॥

ज्योतिर्मण्डलमध्यगं गदहरं लोकैक-भास्वन्मणिं
मेषोच्चं प्रणतिप्रियं द्विजनुतं छायपतिं वृष्टिदम् ।
कर्मप्रेरकमभ्रगं शनिरिपुं प्रत्यक्षदेवं रविं
ब्रह्मेशान-हरिस्वरूपमनघं सिंहेश-सूर्यं भजे ॥ १॥

चन्द्रं शङ्कर-भूषणं मृगधरं जैवातृकं रञ्जकं
पद्मासोदरमोषधीशममृतं श्रीरोहिणीनायकम् ।
शुभ्राश्वं क्षयवृद्धिशीलमुडुपं सद्बुद्धि-चित्तप्रदं
शर्वाणीप्रियमन्दिरं बुधनुतं तं कर्कटेशं भजे ॥ २॥

भौमं शक्तिधरं त्रिकोणनिलयं रक्ताङ्गमङ्गारकम् ।
भूदं मङ्गलवासरं ग्रहवरं श्रीवैद्यनाथार्चकम् ।
क्रूरं षण्मुखदैवतं मृगगृहोच्चं रक्तधात्वीश्वरं
नित्यं वृश्चिकमेषराशिपतिमर्केन्दुप्रियं भावये ॥ ३॥

सौम्यं सिंहरथं बुधं कुजरिपुं श्रीचन्द्र-तारासुतं
कन्योच्चं मगधोद्भवं सुरनुतं पीतांबरं राज्यदम् ।
कन्यायुग्म-पतिं कवित्व-फलदं मुद्गप्रियं बुद्धिदं
वन्दे तं गदिनं च पुस्तककरं विद्याप्रदं सर्वदा ॥ ४॥

देवेन्द्र-प्रमुखार्च्यमान-चरणं पद्मासने संस्थितं
सूर्यारिं गजवाहनं सुरगुरुं वाचस्पतिं वज्रिणम् ।
स्वर्णाङ्गं धनुमीनपं कटकगेहोच्चं तनूजप्रदं
वन्दे दैत्यरिपुं च भौमसुहृदं ज्ञानस्वरूपं गुरुम् ॥ ५॥

शुभ्राङ्गं नयशास्त्रकर्तृजयिनं संपत्प्रदं भोगदं
मीनोच्चं गरुडस्थितं वृष-तुलानाथं कलत्रप्रदम् ।
केन्द्रे मङ्गलकारिणं शुभगुणं लक्ष्मी-सपर्याप्रियं
दैत्याचार्यं भृगुनन्दनं कविवरं शुक्रं भजेऽहं सदा ॥ ६॥

आयुर्दायकमाजिनैषधनुतं भीमं तुलोच्चं शनिं
छाया-सूर्यसुतं शरासनकरं दीपप्रियं काश्यपम् ।
मन्दं माष-तिलान्न-भोजनरुचिं नीलांशुकं वामनं
शैवप्रीति-शनैश्चरं शुभकरं गृध्राधिरूढं भजे ॥ ७॥

वन्दे रोगहरं करालवदनं शूर्पासने भासुरं

स्वर्भानुं विषसर्पभीति-शमनं शूलायुधं भीषणम् ।
सूर्येन्दु-ग्रहणोन्मुखं बलमदं दत्याधिराजं तमं
राहुं तं भृगुपुत्रशत्रुमनिशं छायाग्रहं भावये ॥ ८॥

गौरीशप्रियमच्छकाव्यरसिकं धूम्रध्वजं मोक्षदं
केन्द्रे मङ्गलदं कपोतरथिनं दारिद्र्य-विध्वंसकम् ।
चित्राङ्गं नर-पीठगं गदहरं दान्तं कुलुत्थ-प्रियं
केतुं ज्ञानकरं कुलोन्नतिकरं छायाग्रहं भावये ॥ ९॥

सर्वोपास्य-नवग्रहाः! जडजनो जाने न युष्मद्गुणान्
शक्तिं वा महिमानमप्यभिमतां पूजां च दिष्टं मम ।
प्रार्थ्यं किन्नु कियत् कदा बत कथं किं साधु वाऽसाधु किं
जाने नैव यथोचितं दिशत मे सौख्यं यथेष्टं सदा ॥ १०॥

नित्यं नवग्रह-स्तुतिमिमां देवालये वा गृहे
श्रद्धा-भक्ति-समन्वितः पठति चेत् प्राप्नोति नूनं जनः ।
दीर्घं चायुररोगतां शुभमतिं कीर्तिं च संपच्चयं
सत्सन्तानमभीष्ट-सौख्यनिवहं सर्व-ग्रहानुग्रहात् ॥ ११॥

॥ इति श्रीनवग्रहस्तोत्रं संपूर्णम्॥

॥ नवग्रहस्तोत्रं वादिराजयतिविरचित ॥

भास्वान्मे भासयेत् तत्त्वं चन्द्रश्चाह्लादकृद्भवेत् ।
मङ्गलो मङ्गलं दद्यात् बुधश्च बुधतां दिशेत् ॥ १॥

गुरुर्मे गुरुतां दद्यात् कविश्च कवितां दिशेत् ।
शनिश्च शं प्रापयतु केतुः केतुं जयेऽर्पयेत् ॥ २॥

राहुर्मे रहयेद्रोगं ग्रहाः सन्तु करग्रहाः ।
नवं नवं ममैश्वर्यं दिशन्त्वेते नवग्रहाः ॥ ३॥

शने दिनमणेः सूनो ह्यनेकगुणसन्मणे ।
अरिष्टं हर मेऽभीष्टं कुरु मा कुरु सङ्कटम् ॥ ४॥

हरेरनुग्रहार्थाय शत्रुणां निग्रहाय च ।
वादिराजयतिप्रोक्तं ग्रहस्तोत्रं सदा पठेत् ॥ ५॥

॥ इति श्रीवादिराजयतिविरचितं नवग्रहस्तोत्रम् ॥